॥ श्रीराधास्तवनं गणेशकृतम् ॥

श्रिगणेश उवाच ।
तव पूजा जगन्मातर्लोकशिक्षाकरी शुभे।
ब्रह्मस्वरूपा भवती कृष्णवक्षःस्थलस्थिता ॥ १॥

यत्पादपद्ममतुतलं ध्यायन्ते ते सुदुर्लभम् ।
सुरा ब्रह्मेशशेषाद्या मुनीन्द्राः सनकादयः ॥ २॥

जिवन्मुक्ताश्च  भक्ताश्च सिद्धेन्द्राः कपिलादयः ।
तस्य प्राणाभिदेवि  त्वं प्रिया प्रानाधिका परा ॥ ३॥

वामाङ्गनिर्मिता राधा दक्षिणाङ्गश्च माधवः ।
महालक्ष्मीर्जगन्माता तव वामाङ्गनिर्मिता ॥ ४॥

वसोः सर्वनिवासस्य प्रसूस्त्वं परमेश्वरी ।
वेदानां जगतामेव मूलप्रकृतिरीश्वरी ॥ ५॥

सर्वाः प्रकृतिका मातः सृष्ट्यां च त्वद्विभूतयः ।
विश्वानि कार्यरूपाणि त्वं च कारणरूपिणी ॥ ६॥

प्रलये ब्रह्मणः पाते तन्निमेषो हरेरपि ।
आदौ राधां समुच्चार्य पश्चात् कृष्णं परात्परम् ॥ ७॥

स एव पण्डितो योगी  गोलोकं याति लीलया ।
व्यतिक्रमे महापी ब्रह्महत्यां लभेद् ध्रुवम् ॥ ८॥

जगतां भवती माता परमात्मा पिता हरिः ।
पितुरेव गुरुर्माता पूज्या वन्द्या परत्परा ॥ ९॥

भजते देवमन्यं वा कृष्णं वा सर्वकारणम् ।
पुण्यक्षेत्रे महामूढो यदि निन्दा राधीकाम् ॥ १०॥

वंशहानिर्भवेत्तस्य दुःखशोकमिहैव च ।
पच्यते निरते घोरे याव द्रदिवाकरौ ॥ ११॥

गुरुश्च ज्ञानोद्गिरणाज्ज्ञानं स्यान्मंत्रतंत्रयोः ।
स च मन्त्रश्च तत्तन्त्रं  भक्तिः  स्याद् युवयोर्यतः ॥ १२॥

निशेव्य मन्त्रं देवानां जीवा जन्मनि जन्मनि ।
भक्ता भवन्ति दुर्गायाः पादपद्मे सुदुर्लभे ॥ १३॥

निषेव्य मन्त्रं शम्भोश्च जगतां कारणस्य च ।
तदा प्राप्नोति युवयोः पादपद्मं सुदुर्लभम् ॥ १४॥

युवयोः पादपद्मं च दुर्लभं प्राप्य पुण्यवान् ।
क्षणार्धं षोडशांशं च न हि मुञ्चति दैवतः ॥ १५॥

भक्त्या च युवयोर्मन्त्रं गृहीत्वा वैष्णवादपि ।
स्तवं वा कवचं वापि कर्ममूलनिकृन्तनम् ॥ १६॥

यो जपेत् परया भक्त्या पुण्यक्षेत्रे च भारते ।
पुरुषाणां सहस्रं च स्वात्मना  सार्धमुद्धरेत् ॥ १७॥

गुरुमभ्यर्च्य विधिवद् वस्त्रालंकारचन्दनैः ।
कवचं धारयेद् यो हि विष्णुतुल्यो भवेद् ध्रुवम् ॥ १८॥

॥ इति श्री ब्रह्मवैवर्ते गणेशकृतं श्रीराधास्तवनं
सम्पूर्णम् ॥